त्वात्कलाइत्यनेनैवतद्ग्रहणसंभवात्पृथगुक्तिर्व्यर्थेत्याशंकांप्रमाणेनैवपरिहरति ॥ कलाभ्यइति ॥ कर्मप्रत्यवरामिति ॥ कर्माभि मानिदेवोत्यंतावरइत्यर्थः । कलाभ्यइत्युपलक्षणं । अन्यदेवेभ्यश्चेत्यपिग्राह्यं ॥ तदिति ॥ कर्मेत्यर्थः । कःकर्माभिमानिदेवइ त्यतआह ॥ पुष्करइति ॥ चोवधारणे । पुष्करएवकर्मेत्युच्यतइतियोज्यं ॥ ततश्चायंमंत्रार्थः ॥ गताः प्रकृतिबंधान्मुक्ता इति वक्ष्यमाणानांसर्वेषांविशेषणं । प्रतिदेवतासु देवताप्रतिबिंबभूतासुमुक्तप्रजासु । प्रतिष्ठाःप्रतिप्रतिनियामकत्वेनस्थिताःप्रा णाद्याःपंचदशकलादेवा स्तदन्यसर्वदेवाश्च । कर्माणिकर्माभिमानिदेवताच । विज्ञानमयआत्माजीवश्चेत्येतेसर्वेपरेव्ययेपरमात्म निचतुर्व्यूहगतवासुदेवनामकेप्रविशंति । इतःपरं महाप्रलयसमाप्तिपर्यंतंविष्णौस्थित्वासृष्टौजातायांपरमात्मनोबहिर्निर्गत्यश्वेतद्वी पंगत्वातत्रश्वेतद्वीपपतिंदृष्ट्वातदाज्ञयेतिवाक्यमध्याहार्यं । तदुक्तं । सर्वेपितेमुक्तगणाअमंदसांद्रंनिजानंदमशेषतोपि । भुंजंतएवा सतईशदेहेलयेथसर्गेबहिरेवयांतीति । श्वेतद्वीपंततोगत्वादृष्ट्वाविष्णुंचचेतनाः । अनुज्ञाताःप्रमोदंतेनिर्दुःखाश्चधरादिष्विति ॥ ए कीभवंतीति ॥ प्रकृताःसर्वेपिमुक्ताःप्राग्विभिन्नमतयोधुनैकविषयकमतिकाःभवंति । यथाप्राग्विमतयोब्राह्मणाःराजकुलएकी भवंतितद्वत् । तत्रापिसायुज्यमुक्तियोग्याःभगवच्चक्षुरादिमतिकाःतद्धस्तादिप्रयोज्यक्रियाःभवंति । सार्ष्टिसारूप्ययोग्यास्तुसा दृश्यंप्राप्नुवंति । यथाकीटाःभ्रमरैरेकीभूतास्तद्वत् । सालोक्यसामीप्ययोग्यास्तुक्षीराब्ध्यादिस्थितभगवद्रूपापेक्षयाएकस्थानस्थिति काःभवंति। अतःएकीभवंतीतियुज्यते। यथाह्रिइतस्ततस्स्थिताःगावःसायंगोष्ठएकीभवंतीत्युक्तिस्तद्वत् । अत्रसालोक्ययोग्यानांकिं

भा० । कलाभ्यःपृथगुक्ततत्पुष्करःकर्मचोच्यतइतिच ।

चिद्दूरेस्थानैक्यं । सामीप्यभाजांतुभगवत्समीपइतिविवेक्तव्यमिति। अद्वैतवादिनस्तुकलाः मुक्तिकालेविदुषोदेहारंभकाःप्राणाद्याः पंचदशकलाः प्रतिष्ठाःस्वकारणानिप्रतिगताःभविष्यंति। तदभिमानिनःसर्वेदेवाश्चप्रतिदेवतासुस्वमूलरूपेषुगताःभविष्यंतीतिव्याचक्षते। तान्दूषयति ॥ अन्यथेति ॥ परव्याख्यानइत्यर्थः । यच्चप्रतिदेवताशब्दव्याख्यानंतदपिदूषयति ॥ नचेति ॥ देवानांमूलरूपाणिप्रतिदेवताइतिनोच्यंते । अनुशासनाद्यभावात्। अतश्चपरव्याख्यानमयुक्तमित्यर्थः।ननुप्रतिदेवतास्वित्यस्यप्रतिबिंबभूतास्वितिभवद्व्याख्यानमप्ययुक्तं। अपदार्थत्वादवाक्यार्थत्वाच्चेत्यतआह ॥ प्रतिरूपशब्दवद्धिप्रतिदेवताशब्दइति ॥ यथारूपंप्रतिगतंप्रतिरूपमिति। प्रादिसमासेकृतेदेवतासदृशास्तदधीनाश्चप्रतिदेवताशब्देनोच्यंते। तदधीनत्वेसतितत्सदृशत्वमेवचप्रतिबिंबत्वं । अतःप्रतिदेवताशब्देनवाक्यार्थविधयादेवताप्रतिबिंबावगमसंभवाद्युक्तमस्मद्व्याख्यानमिति । ननुतथापिपंचदशकलाइत्यस्यतदभिमानिदेवाइति गताइत्यस्यचमुक्ताइतिव्याख्यानमयुक्तं । निर्मूलत्वात्प्रतीतार्थेबाधकाभावाच्चेत्यतआह ॥ विज्ञानेत्यादिनादेवताएवोच्यंतइत्यंतेन॥ गताःकलाइतिमंत्रे कलाभिमानिनोमुक्तादेवाएवोच्यंते ।इमाःषोडशकलाःइत्याथर्वणब्राह्मणोपनिषत्समाख्यानात् । इमाःषोडशकलाइतिवाक्येयदिमुक्ताःकलाभिमानिदेवाउच्येरन् । तदातत्समाख्यानादस्त्वस्यामाथर्वणमंत्रोपनिषदिमुक्तग्रहणं । तदेवकुतइत्यतउक्तं। इमाःषोडशकलाःपुरुषायणाःपुरुषंप्राप्येति ॥ यथासोम्येमाःसमुद्रायणाइतिनदीदृष्टांतपू

---

भा॰ । अन्यथागताभविष्यंतीत्यध्याहारोदोषः । नचमूलरूपाणिप्रतिदेवताइत्युच्यंतेदेवानां । प्रतिरूपशब्दवद्धिप्रतिदेवताशब्दः । विज्ञानात्मासहदेवैश्चसर्वैःप्राणाभूतानिसंप्रतिष्ठंतियत्र । इमाःषोडशकलाःपुरुषायणाःपुरुषंप्राप्यास्तंगच्छति यथासोम्येमाःसमुद्रायणाइतिनदीदृष्टांतपूर्वकंपुरुषप्राप्तिकथनाचमुक्तदेवताएवोच्यंते ।

र्वकंपुरुषप्राप्ति कथनादिति । यथाप्राक्समुद्रमप्राप्तानांनदीनांपश्चात्समुद्रप्राप्तिःतथाप्राक्पुरुषमप्राप्तानांकलानांपश्चात्पुरुषप्राप्ति
स्तावदुच्यते । नचजडकलानांतदभिमानिनाममुक्तदेवानांवाग्रहणेतत्संभवति । कलानांनाशितत्वेनतद्देवानांजडदेहादिविशिष्टत्वे
नभगवत्प्रवेशरूपपुरुषप्राप्तेःश्रुत्यादिसिद्धत्वात् । नन्विमाःषोडशकलाइत्यत्रेमाइतिप्रकृतपरामर्शःक्रियते । नचदेवताःप्रकृताः ।
तत्कथमुक्तंदेवानामत्रग्रहणमित्यतउक्तं ॥ **विज्ञानात्मेति** ॥ यत्रेत्यस्यानंतरमितिकलादेवतानांप्रकृतत्वादितिशेषः । तेनकथना
च्चेतिसमुच्चयोपपत्तिः । विज्ञानात्माजीवःप्राणाःइंद्रियाणिभूतानिच । उपलक्षणमेतत् । जीवादिषोडशकलाभिमानिदेवैःसहय
त्रसंप्रतिष्ठतीतिविज्ञानात्मेतिपूर्वखंडस्थवाक्येनोच्यते । ततश्चदेवानांप्रकृतत्वादिमाइतिपरामर्शोपपत्तिः । नचैवमपिमुक्तदेवाइति
व्याख्यानमयुक्तमितिवाच्यं । अमुक्तदेवानांपुरुषप्राप्त्यनुपपत्त्यालक्षणयामुक्तदेवग्रहणोपपत्तेरिति । पुरुषंप्राप्येत्युक्तःपुरुषोजीव
श्चेत्कथंतंप्राप्तानांतुमुक्तत्वमित्यतआह ॥**सइति**॥ प्राणमसृजतेत्युपक्रमवाक्योक्तस्तावद्भगवानेव । मुख्यप्राणादिस्रष्टृत्वलिंगात् ।
अतःउपक्रमानुसारेणपुरुषंप्राप्येत्युपसंहारोक्तःपुरुषोभगवानेवेत्यंगीकार्यं । अन्यथोपक्रमोपसंहारयोर्विरोधप्रसंगात् । यद्यप्युप
क्रमादुपसंहारःप्रबलःव्याख्यानरूपत्वात्परत्वाच्च । तथापियदोपक्रमोनिरवकाशःतदोपसंहारादपिप्रबलएवेत्यन्यत्रोक्तं । अतःउपक्र
मानुसारेणोपसंहारस्यार्थांतरकथनंयुक्तमेवेतिभावः ॥७॥ परेऽव्ययइत्यनेनोक्तंभगवत्प्रवेशरूपंमोक्षंदृष्टांतकथनपूर्वकंविवृणोतिवेद

भा० । सप्राणमसृजतेत्यादेश्चपुरुषोभगवान् ।

पुरुषः ॥ यथानद्यइति ॥ अत्रमंत्रेनामरूपेविहायनामरूपाद्विमुक्तइतिचनामरूपत्यागएवोच्यतइतिप्रतीतिनिरासायतद्वाक्यद्वयंप्रमाणेनैवव्याचष्टे ॥ अगम्येति ॥ मुक्तिगाःनराःजीवाःअमुक्तैरगम्यनामरूपत्वाद्विहीननामरूपाइत्युच्यंतइतिशेषः । ननुतद्रहितत्वात् । अन्यथाबहुप्रमाणविरोधत्वादितिहिशब्दार्थः । अनेननामरूपाद्विमुक्तइतिवाक्यंविवृतं। अगम्यनामरूपत्वेननामरूपराहित्योक्तौदृष्टांतमाह ॥ अशरीरइति ॥ यथावायुःसामान्यपुरुषागम्यत्वादशरीरउच्यतेतथेत्यर्थः । एवंनामरूपाद्विमुक्तइतिदृष्टांतवाक्यंव्याख्यायेदानींनामरूपेविहायेतिदार्ष्टांतिकवाक्यमपिव्याख्याति ॥ एवंनद्यइति ॥समुद्रस्थाःनद्यःसामान्यागम्यरूपतः। भावप्रधानोनिर्देशः । रूपपदंचोपलक्षणं । सामान्यागम्यनामरूपत्वान्नामरूपेविहायास्तंगच्छंतीत्युच्यंतइत्यर्थः। ननुसमुद्रप्राप्तानांनदीनांसामान्यागम्यनामरूपत्वंसिद्धं । अतस्तेननिमित्तेनकथंनामरूपेविहायेत्याद्युक्तमित्याशंकांस्मृत्यैवपरिहरति ॥ स्वकीयमिति ॥ अनेननदीदेवतानांस्वकीयनामरूपज्ञानंनास्ति । प्रधानवायोस्तुतदस्तीत्युच्यते । तेनप्रधानवाय्वाद्यगम्यनामरूपत्वाभावेपिनदीदेवतारूपसामान्यजीवागम्यनामरूपत्वमस्त्येव अतस्तेननिमित्तेननामरूपराहित्योक्तिर्युज्यतइतिभावः।एवंनामरूपराहित्यकथनमंगीकृत्यवाक्यद्वयंव्याख्यातं । इदानींतुतदेवनास्तीतिभावेनविमुक्तइत्येतदनूद्यव्याचष्टे ॥ विमुक्तइत्यमुक्तइ

---

उप० । यथानद्यःस्यंदमानाःसमुद्रायणाःसमुद्रंप्राप्यास्तंगच्छंतिनामरूपेऽविहाय । तथाविद्वान्नामरूपाद्विमुक्तःपरात्परंपुरुषमुपैतिदिव्यं ॥ ८ ॥

भा० । अगम्यनामरूपत्वादमुक्तैर्मुक्तिगानराः । विहीननामरूपास्तुनतुतद्रहितत्वतः । अशरीरोयथावायुःसामान्यागम्यदेहतः । एवंनद्यःसमुद्रस्थाःसामान्यागम्यरूपतः । स्वकीयमुदकंनद्यःसमुद्रेनैवजानते । वायुस्तुतत्पृथग्ज्ञात्वामेघेकृत्वाप्रवर्षतीतिच ॥ विमुक्तइत्यमुक्तइत्यर्थः । विप्रियइतिवत् ।

त्यर्थइति ॥ विमुक्तइतिपदस्यअमुक्तइत्यर्थः । विर्निषेधेपृथग्भावेइतिवचनबलेनवीत्युपसर्गस्याभावार्थत्वंप्रयोगंचदर्शयति ॥ विप्रियइतिवदिति ॥ इदमुपलक्षणं । निपातश्चोपसर्गश्चधातवश्चेतितेत्रयः । अनेकार्थाःस्मृतास्सर्वेपाठस्तेषांनिदर्शनमित्युपसर्गाणामनेकार्थत्वाभिधानात् । वीत्युपसर्गस्यानेकार्थत्वंयुक्तमित्यपिग्राह्यं । विमुक्तोविप्रियइत्युभयत्रापिप्रादिग्रहणस्यगत्यर्थत्वेनकुगतिप्रादयइतिसूत्रेणसुप्सुपेतिवासमासः । तेननसमासानुपपत्तिशंकेतिध्येयं । एवंनामरूपाद्विमुक्तइत्यत्रनामरूपराहित्यंनोच्यते । किंतुतत्साहित्यमेवेत्युक्तं । नन्वेवंसतिपूर्वार्धोक्तदृष्टांतविरोधःस्यात् । तत्रनामरूपेविहायेतितद्धानस्योक्तत्वादित्याशंकापरिहारायइदानींनामरूपेविहायेत्यत्रापिनामरूपसाहित्यमेवोच्यतइतिभावेनपदघट्ट( पदच्छेद )रूपंव्याख्यानंकरोति ॥ अविहायेतिचेति ॥ ननुनामरूपेइत्यस्यद्विवचनांतत्वादेकारांतत्वाच्चप्रगृह्यत्वंप्राप्नोति । ईदूदेद्विवचनंप्रगृह्यमितिप्रगृह्यसंज्ञाविधानात् । ततश्चप्लुतप्रगृह्याअचिनित्यमितिसूत्रेणप्रगृह्यस्यप्रकृतिभावेनामरूपेअविहायेतिसंध्यभावएवस्यात् । गंगेअमूइत्यादिवत् । नामरूपेविहायेतिसंधिस्तुकथमितिचेत् । उच्यते । षष्ठीयुक्तश्छंदसिवेतिसूत्रेवेतियोगंविभज्यछंदसिसर्वेविधयोवाभवंतीतिव्याख्यातंशाब्दिकैः । तेनसर्वेविधयश्छंदसिविकल्प्यंतइतिपरिभाषायाःसिद्धत्वात् । वेतियोगविभागेनवापरिभाषयावानामरूपेइत्यत्रप्रगृह्यत्वंनभवति । ततश्चएङःपदांतादतीतिसूत्रेणपूर्वरूपेसतिदंपतीवेत्यादिवन्नामरूपेविहायेतिसंधिर्युक्तएवेत्येषादिक् । स्यादेतदेवंपूर्वोत्तरार्धयोर्व्याख्यानं । यदिनामरूपविनाशाभावःप्रमितःस्यात् । तदेवकुतइत्यतआह ॥ अनंतमिति ॥ अनं

भा० । अविहायेतिच । अनंतंवैनामेतिश्रुतेः ।

तंवैनामअनंतावैविश्वेदेवाइतिश्रुतेरित्यर्थः । नामअनंतंवै । विनाशशून्यमेव । अनंताविनाशशून्याएवेतिश्रुतेःनामरूपं चाविनाशीत्यंगीकार्यं । अनंतावैविश्वेदेवाइतिरूपाविनाशोक्तेरितिभावः । अत्रेश्वरबुद्ध्युपाधिक्रमविशिष्टस्यनाम्नःस्वरूपेणै वनाशोनास्ति । उपाधिभूतेश्वरबुद्धेर्नाशाभावात् । अस्मदादिबुद्ध्युपाधिक्रमविशेषविशिष्टनाम्नस्स्वरूपेणनाशोपिप्रवाहरूपे णननाशइत्यभिप्रेत्यअनंतंवैनामेतिश्रुतावुक्तमित्यवगंतव्यं ॥ ततश्चायंमंत्रार्थः ॥ यथासमुद्रायणाःसमुद्रोअयनंआश्रयोया सांताःसमुद्रायणाः । णत्वंछांदसं । दृष्टानुविधिर्हिसंज्ञाछंदसोरिष्यतइत्यभियुक्तोक्तेः । स्यंदमानाःस्रवंत्यः । स्यंदूप्रस्रव णइत्युक्तेः । नद्यःसमुद्रंप्राप्य । नामरूपेअविहाय । अस्तंसामान्यजीवादर्शनविषयतांगच्छंति । तथाविद्वान्नामरूपाद्वि मुक्तःअमुक्तपुरुषागम्यनामरूपयुक्तइतियावत् । यद्वानामरूपाद्विमुक्तःअमुक्तःसन् । परात्परंदिव्यपुरुषंभगवंतमुपैतिप्रविश तीति ॥ ८ ॥ वेदपुरुषःस्वोक्तार्थेतात्पर्यद्योतनायएतदुपनिषदुक्तप्रकारेणभगवज्ज्ञानिनःफलमाह ॥ सयइति ॥ अत्रपरमंब्रह्म वेदब्रह्मैवभवतीतिवाक्यंऐक्यार्थकत्वप्रतीतिनिरासायप्रमाणेनैवव्याचष्टे ॥ परंब्रह्मेति ॥ ऐक्यार्थत्वेपरमितिविशेषणमनुपपन्नं । अद्वैतमतेमुक्तौपरापरभेदाभावादितिज्ञापयितुंपरमितिविशेषणं । अवधारणात्मकतुशब्दस्यबृंहितएवेत्यन्वयः । तथाचपुरुषःपरं ब्रह्मविदित्वास्वयोग्यतः भावप्रधानोनिर्देशः । स्वयोग्यतानुसारेणपूर्णएवभवतिनतुब्रह्मात्मकः । अन्यथान्यज्ज्ञातंअन्याभावः



उप० । सयोहवैतत्परमंब्रह्मवेदब्रह्मैवभवति । नास्याब्रह्मवित्कुलेभवति । तरतिशोकंतरतिपाप्मानंगुहाग्रंथिभ्योविमुक्तोऽमृतोभवति ॥ ९ ॥

भा० । परंब्रह्मविदित्वातुबृंहितःस्यात्स्वयोग्यतः ।

स्वस्यप्राप्तइतियावत् । नचेष्टापत्तिः । यद्ब्रह्मज्ञायतेतद्भावएवमुक्तौभवतीत्यंगीकारेविरोधादित्येवंश्रुतिर्व्याख्यातेतिज्ञेयं । स्वयोग्यतइतिकिमर्थंवक्तव्यमित्यतआह ॥ **नायोग्यमिति** ॥ एवंवेदब्रह्मैवभवतीत्यस्यार्थांतरपरत्वेप्रमाणमुक्तं । इदानीमैक्य परत्वाभावेपिप्रमाणंपठति ॥ **ब्रह्मत्वमिति** ॥ जीवानांब्रह्मत्वंबृंहितत्वंपूर्णत्वमेवस्यात् । नपरमात्मतेत्यर्थः । कुतइत्यतआह ॥ **अस्वतंत्रस्येति** ॥ ननुब्रह्मवेदब्रह्मैवभवतीत्यस्यमुक्तब्रह्मभेदपरत्वंनवेदपुरुषाभिप्रेतं । अतोनेदंव्याख्यानंयुक्तमित्याशंक्यवे दपुरुषेणैवमुक्तब्रह्मभेदस्यासकृदभिहितत्वात्तदभिप्रेतमेतदितिभावेनाह ॥ **यत्रामृतइत्यादिना** ॥ यत्रामृतइतिवाक्येसूर्यद्वारेण विरजाःतेयत्रअमृतःपुरुषःतंलोकंप्रयांतीतिगंतृगम्यभावोक्त्यामुक्तब्रह्मणोर्भेदसिद्धिः । यत्रतत्सत्यस्येतिवाक्येपिसत्यमेवंजयती तिपूर्वभागेनगंतृगम्यभावोक्त्यातत्सिद्धिः । अमृतस्येतिवाक्येमुक्ताश्रयत्वोक्त्या । शरवत्तन्मयोभवेदित्यत्रजीवस्यब्रह्मैकाग्रत्वो क्त्या । ब्रह्मतल्लक्ष्यमित्यत्रजीवब्रह्मणोर्लक्ष्यवेधकत्वलक्ष्यत्वोक्त्या । निरंजनइत्यत्रसाम्योक्त्या । मुक्तब्रह्मभेदसिद्धिरिति ज्ञेयं । नकेवलमिदंव्याख्यानंवेदपुरुषस्याभिप्रेतं । किंतुसकलवेदार्थनिर्णायकन्यायग्रथनात्मकब्रह्मसूत्रकर्तुर्भगवतोबादरा यणस्याप्यभिप्रेतमेव । तेनापिमुक्तब्रह्मभेदस्यासकृदुक्तत्वादितिभावेनाह ॥ **मुक्तोपसृप्येति** ॥ नविष्णोरन्यस्य यस्मिन्द्यौ

---

भा० । नायोग्यंकिंचिदाप्नोतिकुतएवहरेर्गुणानितिच । ब्रह्मत्वंबृंहितत्वंस्याज्जीवानांनपरात्मता । अस्वतंत्रस्यजीवस्यकुतोनित्यस्वतंत्रतेतिस्कांदे । यत्रामृतःसपुरुषो ह्यव्ययात्मा । यत्रतत्सत्यस्यपरमंनिधानं । अमृतस्यैषसेतुः । शरवत्तन्मयोभवेत् । ब्रह्मतल्लक्ष्यमुच्यते । निरंजनःपरमंसाम्यमुपैति । इत्यादिनामुक्तस्यसर्वत्रभगवत्सकाशाद्भे दस्यैवोक्तत्वाच्च । मुक्तोपसृप्यव्यपदेशात् । जगद्व्यापारवर्जं । प्रकरणादसंनिहितत्वाच्चेत्यादिनाभगवतापिसर्वत्रभेदस्यैवसूचितत्वात् ।

रित्यादिश्रुत्युक्तद्युभ्वाद्यायतनस्यामृतस्यैषसेतुरितिवाक्यशेषेणमुक्तप्राप्यत्वाभिधानात् । तस्यचमुक्तानांपरमागतिरित्यादिना विष्णवेकनिष्ठत्वावगमादित्यर्थः ॥ जगद्व्यापारवर्जमिति ॥ मुक्तानांनजगत्स्रष्टृत्वादिव्यापारःकिंतुतद्व्यतिरिक्तकामावाप्तिरेव । ननुसर्वान्कामानाप्त्वाअमृतःसमभवदित्यादिश्रुतौमुक्तानांसर्वकामावाप्तिरुच्यतइतिचेत् । सत्यं । तत्रापिजगद्व्यापारवर्जमेवसर्वान्कामानाप्त्वेत्यर्थोपपत्तेरित्यर्थः। कुतःश्रुतेरर्थसंकोचइत्यतआह॥ प्रकरणादसन्निहितत्वाच्चेति ॥ युक्तएवसर्वानितिश्रुतेःसंकोचः । अत्रजीवस्योच्यमानत्वात् । अस्यजीवप्रकरणत्वेनतदवगमात् । शरीरभेदादुत्क्रम्येतिश्रवणात् । जीवानांचजगद्व्यापारशक्तिविरहितत्वात् । बाधकवशात्सामान्यश्रुतेःसंकोचस्यन्याय्यत्वादितिभावः । तदयंप्रयोगः । नमुक्तोजगद्व्यापारशक्तिमान् । जीवत्वात्सम्मतवदिति । किंचश्रुतिषुमुक्तप्रभेदएवोच्यते । अतस्तद्विरोधाद्ब्रह्मवेदेत्यादिकंनमुक्तब्रह्मैक्यपरमितिभावेनाह ॥ नतइति ॥ परोमात्रयातन्वावृधाननतेमहित्वमन्वश्नुवंतीतिश्रुतेरयमर्थः । कर्तृविशेषानुक्तेर्मुक्ताअमुक्ताश्चेतिशेषः । तन्वास्वरूपेणवृधानपूर्ण । हेविष्णोत्वंमात्रयामात्रायाःमितेःपरोसीतिशेषः। एवंभूतस्यतेमहित्वंमुक्ताअमुक्ताश्चनान्वश्नुवंतिनप्राप्नुवंतीत्यर्थः॥ सोश्नुतइति ॥ योवेदनिहितंगुहायांपरमेव्योमन्सोश्नुतइत्यन्वयः । अत्रसहेत्यनेनमुक्तब्रह्मभेदोज्ञायते ॥ ब्रह्मेशानादिभिरिति ॥ ब्रह्मेशानादिभिर्देवैःमुक्तैरमुक्तैश्चयत्कैवल्यंप्राप्तुंनैवशक्यते । तत्कैवल्यंसर्वोत्तमत्वंयत्स्वभावःयस्यनैसर्गिकं । हेहरेसकेवलः नैसर्गिकसर्वोत्तमत्वविशिष्टोभवानेवेत्यर्थः । ननुयत्रेत्यादिवाक्ये मुक्तोपसृप्यसूत्रे नतेमहित्वमित्यादिश्रुतौमुक्तस्यभगवद्भे

॥ ६२ ॥

भा० । नतेमहित्वमन्वश्नुवंति । सोश्नुतेसर्वान्कामान्सहब्रह्मणाविपश्चिता । ब्रह्मेशानादिभिर्देवैर्यत्प्राप्तुंनैवशक्यते । तद्यत्स्वभावःकैवल्यंसभवान्केवलोहरइत्यादेश्च ।

दएवोच्यते । ब्रह्मचविष्णवादिरूपाद्भगवतोन्यदेव । भगवतःसगुणत्वात्सशरीत्वाच्च । ब्रह्मतुनिर्गुणमशरीरंच । अतोमुक्तब्रह्मभेद परत्वेनब्रह्मवेदेत्यादिश्रुतिव्याख्यानेनोक्तदोषइत्यतआह ॥ मुक्तेभ्योपीति ॥ अत्रविष्णोस्सर्वापेक्षयागुणाधिकत्वमुक्त्वातस्यान्यथाज्ञानेऽनर्थस्ययथावज्ज्ञानफलस्यचोक्तत्वाद्विष्णोरन्यद्ब्रह्मनास्त्येवेत्यवगम्यते । अतोमुक्तब्रह्मैक्यपरतयोक्तश्रुतिर्नव्याख्यातुंशक्यतइतिभावः । यस्यकस्यापिब्रह्मविदःकुलेब्रह्मज्ञानशून्योनजायतइत्यर्थप्रतीतिंनिवारयितुंनास्याब्रह्मवित्कुलेभवतीतिवाक्याभिप्रायंप्रमाणेनैवाह ॥ देवानामिति ॥ प्रायशइत्यस्यव्यावर्त्यमाह ॥ बलवदिति ॥ अन्येब्रह्मज्ञानशून्याइत्यर्थः । देवानांकुलेब्रह्मज्ञानिनएवजायंतइत्येतत्कुतइत्यतआह ॥ यस्मादिति ॥ शापादिबलवद्धेतुतस्तुअन्येब्रह्मज्ञानशून्याअपिजायंत इतिश्लोकार्थः । देवानामितिकिमर्थमुक्तमित्यतआह ॥ नसंततताविति ॥ ज्ञानिनामपिनराणांसंततौप्रायशोब्रह्मविदोनस्युः नजायेरन् तेकदाचित्ब्रह्मविदोजायंतइतिज्ञापयितुंप्रायशइत्युक्तं । ननुदेवानांसंततौप्रायशोब्रह्मविदोजायंते । नतुज्ञानिनांनराणामित्येतत्कुतइत्यतआह ॥ सुराणामिति ॥ कर्तरिषष्ठी । यस्मात्कृतेयुगेसुराणांनियमः । एवंसुरैर्नियमःकृतःतस्मात्देवानामित्यादिकंयुक्तमिति ॥ तस्मादिति ॥ यस्माद्ब्रह्मविदांकुलेब्रह्मविदोजायंतेतस्मात्ब्रह्मवित्पुत्रपौत्रादिफलजनकत्वात्यो

---

भा० । मुक्तेभ्योपिमनुष्येभ्योदेवाएवगुणाधिकाः । तेभ्योवायुस्ततोविष्णुःपरिपूर्णगुणस्सदा । येत्वेतदन्यथाविद्युस्तेहियांत्यधरंतमः । येत्वेतदेवंजानंतितेयांतिपरमंहरिमितिच । देवानांसंततौजाताःप्रायशोज्ञानिनःकृते । बलवद्धेतुतश्चान्येयस्माद्ब्रह्मविदःसुराः । नसंततौब्रह्मविदोनराणांज्ञानिनामपि । प्रायशःस्युःसुराणांचनियमोयंकृतेयुगे । तस्मात्सभगवान्विष्णुर्ज्ञेयःसर्वोत्तमोत्तमः । सदासर्वगुणैःपूर्णोयोनंतःपुरुषोत्तमइतिच ।

भगवत्त्वादिविशेषणविशिष्टःसविष्णुर्ज्ञेयइत्यन्वयः ॥ ततश्चायंमंत्रार्थः ॥ यःएतत्तदेतत्सत्यमित्यादिनोक्तंपरमंब्रह्मवेद सःब्रह्मैव स्वयोग्यतानुसारेणबृंहितएवभवति । नतुब्रह्मात्मकः । अस्यब्रह्मज्ञानिनःकुलेअब्रह्मवित्ब्रह्मज्ञानशून्योनभवति । किंतुदेवपक्षेप्रायेणब्रह्मज्ञानिनएवभवंति । मनुष्यपक्षेतुकदाचित्ब्रह्मज्ञानीभवति । शोकंदुःखंतरति । पाप्मानंतरति । गुहाग्रंथिभ्यःमूलप्रकृतिसत्वादिगुणत्रयबंधलिंगशरीरेभ्योविमुक्तःअमृतःस्वरूपसुखाविर्भावरूपमुक्तिविशिष्टश्चभवतीति ॥ ९ ॥ उक्तब्रह्मविद्यायांन यःकश्चिदधिकारी । किंतुपुरुषविशेषएवेतिवक्तुंप्रतिजानीते ॥ तदेषइति ॥ ततत्र। पुरुषविशेषएवब्रह्मविद्याधिकारीत्यर्थे । एषःवक्ष्यमाणःश्लोकोमंत्रःप्रमाणंभवतीत्यर्थः । तंमंत्रमुदाहरति ॥ क्रियावंतइति ॥ येक्रियावंतःकामादिवर्जनपूर्वकंईश्वरार्पणबुद्ध्यास्ववर्णाश्रमोचितकर्मनिष्ठाःश्रोत्रियाःवेदाध्ययनशीलाःब्रह्मनिष्ठाःभगवद्भक्ताःस्वयंस्वतंत्रंभगवंतमुद्दिश्यजुह्वतः अग्निहोत्रादिहोमंकुर्वाणाः।क्रियावंतइत्युक्तावपिकुरुपांडवन्यायेनपृथगुक्तिः।यद्वाजुह्वतःहोमंकुर्वंतः। क्रियावंतःहोमेतरक्रियावंतइतिव्याख्येयं । एकऋषीन् । ऋत्यकइतिप्रकृतिभावान्नसंधिः। प्रधानर्षीन्। ब्रह्मविद्यासंप्रदायप्रवर्तकान्। श्रद्धयंतः श्रद्धापूर्वकमर्चयंतः । यैश्चविधिवत्शिरोव्रतंतन्नामकव्रतविशेषः चीर्णंकृतं । तेषामेवएतांपूर्वोक्तांब्रह्मविद्यां तुविशेषेणवदेत अर्थप्रकाशनपूर्वकंवदेदित्यर्थः । भासनोपसंभाषेतिसूत्रेणभासनार्थेवदतेरात्मनेपदमितिज्ञातव्यं ॥ १० ॥ एवंवेदपुरुषःउपसन्नंशिष्यं



उप० । तदेषश्लोकः । क्रियावंतःश्रोत्रियाब्रह्मनिष्ठाःस्वयंजुह्वतएकऋषीञ्छ्रद्धयंतः । तेषामेवैतांब्रह्मविद्यांवदेतशिरोव्रतंविधिवद्यैस्तुचीर्णं ॥ १० ॥

प्रतिगुरोःब्रह्मविद्योपदेशप्रकारमुक्त्वाऽउपसंहृतवान् । इदानीमंगिराःशौनकंप्रतिउक्तमर्थमुपसंहरति ॥ तदेतदिति ॥ ऋषिःअंगिराः । तत् । पदसमन्वयवाक्यसमन्वयाभ्यांपरापरविद्यागम्यं । एतत् जगत्स्रष्टृत्वादिगुणविशिष्टंसत्यंभगवंतंपुराशौनकायोवाच । एतत्पूर्वोक्तंब्रह्मअचीर्णव्रतोनाधीते । नाधीयीतेत्यर्थः ॥ एवंउपनिषदंसमाप्यवेदपुरुषोमंगलंनिबध्नाति ॥ ॐनमइति ॥ परमऋषिभ्यइत्यत्रऋत्यकइतिप्रकृतिभावादाद्गुणइतिनगुणः । आदराद्विरुक्तिः ॥ ११ ॥ इतिषष्ठःखडः ॥६॥ एवंसमापितभाष्योभगवानाचार्यवर्योंतेपिभगवत्प्रीत्याशासनरूपंतन्नतिस्तुतिरूपंचमंगलंनिबध्नाति ॥ प्रीयतामिति ॥ अहंपरमोदारसद्गुणं । एनंउक्तोपनिषत्प्रतिपाद्यंभगवंतंनमामि । सभगवान्मह्यंप्रीयतां । प्रागप्रीतःप्रीयतामितिनप्रार्थ्यते । किंतुनित्यमतिशयेनप्रीतइतिभावेनोक्तंममसदाप्रेष्ठप्रेष्ठतमइति । अतिशयेनप्रीतःप्रेष्ठः अतिशयेनप्रेष्ठःप्रेष्ठतमः प्रेष्ठात्प्रेष्ठतमः निरतिशयप्रियइत्यर्थइत्यशेषमतिमंगलं ॥ तातश्रीतिर्मलाचार्यगुरुप्रोक्तोयमाशयः । आथर्वणोपनिषदस्तद्भाष्यस्यापिदर्शितः॥१॥ इतिश्रीमत्तिर्मलाचार्यसूरिसूनुकृष्णाचार्यसूरिविरचितंश्रीमदाथर्वणोपनिषद्भाष्यविवरणंसंपूर्णं ॥ ॥ छ ॥

यं ग्रंथः कुंभघोणस्थेन टी. आर्. कृष्णाचार्येण मुंबय्यां निर्णयसागरमुद्रणालये मुद्रयित्वा प्रकाशितः शाकः १८२४ सन १९०३.

---

उप० । तदेतत्सत्यमृषिरंगिराःपुरोवाच । नैतदचीर्णव्रतोधीते । ॐनमःपरमऋषिभ्योनमःपरमऋषिभ्यः ॥ ११ ॥ आथर्वणोपनिषत्समाप्ता ॥

भा० । प्रीयतांभगवान्मह्यंप्रेष्ठप्रेष्ठतमःसदा । ममनित्यंनमाम्येनंपरमोदारसद्गुणं ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितमाथर्वणोपनिषद्भाष्यंसंपूर्णं ॥

श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः ॥ संपूर्णसंविदानंदमुखसर्वगुणात्मकं ॥ रमारमणमिष्टा
र्थंप्रपद्येमध्ववल्लभं ॥ १ ॥ आथर्वणींमंत्रोपनिषदंयथावद्याचिख्यासुर्भगवानानंदतीर्थमुनिर्निर्विघ्नपरिसमाप्तिहेतुभूतंतदुक्तगुणव
द्भगवत्स्तुतिनतिरूपंमंगलमादावाचरति ॥ आनंदमिति ॥ आनंदरूपमित्यानंदउक्तः। नित्यंविभुमित्यत्रनित्यता। सबाह्याभ्यं
तरोह्यजइत्यजत्वं। अजत्वान्नित्यत्वादजरं। स्वरूपनित्यत्वेपिगुणद्वारानाशोस्तिकिमित्यतोनेत्युक्तं अच्युतमिति। एतच्चाक्षरंशब्दे
नोक्तं। नित्यानामपिगुणानांह्रासोस्तिकिमित्यतोनेत्युक्तं अक्षयमिति। एतदपितदव्ययमित्यनेनोक्तं। अनंतशक्तित्वंच यथासुदी
प्तादित्यादिनोक्तसृष्ट्यालब्धं। यःसर्वज्ञइतिसर्वज्ञत्वं। संसारश्रांतस्यतन्निवृत्तयेपरमानंदावाप्तयेचब्रह्मविद्यांवक्तुकामऋष्याद्यज्ञा
त्वाविद्याभ्यासिनो योहवाअविदितार्षेत्यादिनानर्थोक्ते रक्षरगणनयाछंदोवगते यंयातदक्षरमधिगम्यतइत्यादिनादेवतावगते
श्चं तदुभयंविहायऋषीनाहवेदपुरुषोब्रह्मादेवानामित्यादिना। सर्वाविद्यायस्यांप्रतिष्ठंते सासर्वविद्याप्रतिष्ठा तांसर्वविद्याप्रतिष्ठां।
यस्यांलब्धायांअन्याविद्याविदिताःसफलाभवंतीत्यर्थः ॥ १ ॥ अथर्वन्नित्यस्यचतुर्थीअथर्वणइति । प्रवदेतप्रावदत् । अंगी
रितिरेफांतः तस्यचतुर्थीअंगिरइति । भरद्वाजस्यपुत्रोभारद्वाजः । सत्यवहोनामतः । परैवविवक्षाभेदादवरातांपरावरां ।
परामपरांचविद्यां। तेचवक्ष्येते पराचैवापराचेति ॥ २ ॥ शुनकस्यापत्यंशौनकः। प्रत्यब्दंयज्ञकृन्महाशालः। कर्मदेवतादिप्र
तिपादकंमयाभ्यस्तं कर्मादिकंचास्वतंत्रं ततोनपुरुषार्थप्रदं। नचाप्रयोजकं। पुरुषार्थहेतुतयावेदाद्युक्तत्वात् । अतःकस्यचि
दंगंकर्मादिकं। तथाचकस्मिन्वस्तुनिविज्ञाते इदंसर्वं कर्मादिकं विज्ञातं विज्ञातफलं भवति। तत्किमितिप्रश्नार्थः ॥ ३ ॥ कर्मा

दिंप्रतिपादकत्वेनापरविद्याख्यंऋगादिकंब्रह्मप्रतिपादकत्वेनपरविद्याख्यस्यऋगादेरेवांगमितिपरिहारंहृदिनिधायपरापरविद्ययोरं गांगिभावस्फोरणायतयोःस्वरूपंनिरूपयितुंप्रस्तावयति ॥ तस्माइति ॥ किंसंज्ञकेद्वेविद्येइत्यतउक्तं ॥ पराचैवापराचेति ॥४॥ प्रस्ताविताअपरविद्याकेत्यतआह ॥ तत्रेति ॥ अयंवर्णःअस्मिंस्थानेऽनेनप्रयत्नेनोच्चार्यइतिनिरूपकंशास्त्रंशिक्षा । कल्पःसूत्रं । शब्दसाधुत्वासाधुत्वज्ञापकंव्याकरणं । निरुक्तंशब्दनिर्वचनकरं । गायत्र्युष्णिगनुष्टुप्बृहतीपंक्तित्रिष्टुप्जगतीनांतत्प्रभेदानांच छंदसांलक्षणनिरूपकंछंदः । ज्यौतिषंकालनिर्णयकरं ॥५॥ प्रस्तावितांपरविद्यांनिरूपयति ॥ अथपरेति ॥ अक्षरस्वरूपंनिरूपय ति ॥ यत्तदित्यादिना ॥ अद्रेश्यमदृश्यं । विभुंसमर्थं । अक्षरस्यादृश्यत्वेकथंययातदक्षरमधिगम्यतइत्युक्तिरित्यतआह ॥ यद्भू तयोनिंपरिपश्यंतिधीराइति ॥ अधीराणामदृश्यमित्यर्थत्वान्नविरोधइत्यर्थः ॥ ६ ॥ यद्भूतयोनिमित्यक्षरस्यस्रष्टृत्वमुक्तं । तत्रसंहर्तृत्वस्यानुक्तत्वादन्यत्संहर्त्रितिप्रतीयते । तांनिवारयन्स्रष्टृत्वसंहर्तृत्वप्रकारंसदृष्टांतमाह ॥ यथोर्णनाभिःसृजतेगृह्ण तेचेति ॥ किमनुसृत्यसृजतीत्यतोदृष्टांतेनाह ॥ यथापृथिव्यामोषधयःसंभवंतीति ॥ यथापृथिवी शाल्यादिनानाबीजानि अपेक्ष्यतत्तदंकुरादीन्जनयति। तथाचेतनानांविविधकर्माण्यपेक्ष्यतत्तत्सृजतीत्यर्थः। तत्तत्स्रष्टृत्वंचनकुलालादिवत्क्लेशेनेतिदृष्टां तेनाह ॥ यथासतइति ॥ सतश्चेतनाधिष्ठितात्पुरुषाद्देहाद्यथाकेशलोमानिअनायासेनभवंति तथा विश्वं जगदपि अनायासे नाक्षरादिहसंभवतीत्यर्थः ॥ ७ ॥ यद्यप्यूर्णनाभ्युपभुक्तमन्नमेवतंत्वाकारेणपरिणमते नतूर्णनाभिश्चेतनः । तथापियथापृथिव्या मित्यादिदृष्टांतोक्त्यापरिणामिकर्तृत्वंप्रतीयतेतन्निवारयितुमाह ॥ तपसेति ॥ तपसाआलोचनेनज्ञानेनविचारेणेतियावत् ।

चीयतेसंबध्यते ब्रह्म । ज्ञानवतःकारणस्यपरिणामिकर्तृत्वमयुक्तमित्यर्थः । विचारानंतरभाविसृष्टिक्रममाह ॥ ततोन्नमि त्यादिना ॥ अत्रदेवता जडानिच ग्राह्याणि। कर्मचजातं । कर्मसुनिमित्तेषुअमृतंस्वर्गादिकंचजातमितियोज्यं॥ ८ ॥ तपसाची यतइत्युक्त्यापूर्वज्ञानाभावप्रतीतिंनिवारयन्तपसःसंतापात्मकत्वप्रतीतिंचनिवारयति ॥ यःसर्वज्ञइत्यादिना ॥ कस्यादिसृष्टि रित्यतआह ॥ तस्मादिति ॥ ९ ॥ प्रथमःखंडः ॥ १ ॥ परविद्यायाअपरविद्यांगमित्युक्तंतत्प्रकारंदर्शयति ॥ तदेतत्सत्यमि त्यादिना ॥ तस्यैवंयोजना। कवयोमंत्रेषुयानिकर्माण्यपश्यन् तानित्रेतायांबहुधासंततानि। सत्यकामाःसत्यस्यज्ञानार्थिनःसंतोयूयं तान्याचरथ । सत्यंनामकिमित्यतोयदेतदक्षरंप्रकृतंतदेतत्सत्यमिति। कर्मादिकंब्रह्मज्ञानकारणमित्यर्थः। एषभगवज्ज्ञानार्थमनुष्ठि तःकर्मसंदर्भोलोकेवःसुकृतस्यलोकस्यउपपन्नःपंथाः॥ १ ॥ भगवज्ज्ञानकारणंकर्मेतिप्रकृतं। तदाचरणप्रकारमाह ॥ यदेत्यादिना॥ लेलायते परिवर्तते । आज्यभागावंतरेणाज्यभागयोर्मध्ये ॥२॥ प्रकृतस्याग्निहोत्रस्येतिकर्तव्यतांतदभावेनर्थकथनेनाह ॥ यस्येत्या दिना ॥ अदर्शपौर्णमासमिति । अमावास्यापौर्णमास्योर्विशेषहोमरहितमित्यर्थः । नूतनधान्यहोमरहितमनाग्रयणं । अहुतंतत्त त्कालहोमरहितं। अवैश्वदेवंविश्वेदेवपूजारहितं। आसम्यक्ऊर्ध्वान्सप्तमान् (लोकान्हिनस्ति) ऊर्ध्वसप्तलोकप्राप्तिस्तस्यनभवती त्यर्थः ॥ ३ ॥ कुत्रहोमःकार्यइत्यपेक्षायांयदालेलायतेह्यर्चिरित्युक्तमधिकरणंविवृण्वन्नाह ॥ कालीति ॥ ४ ॥ भ्राजमानास्वे तासुजिह्वासुविषये । यश्चरतइत्युक्तमाचरणमेवाह ॥ यथाकालमिति ॥ कालमनुसृत्येत्यर्थः । आददायन्आददत् । यथाका लंहोतुःफलमाह॥तमिति॥एताःएतेप्रसिद्धाःसूर्यस्यरश्मयःसूर्यरश्मिस्थादेवाः। देवानांपतिरेकोमुख्यःअधिवसत्यनेनेत्यधिवासः।

मुख्याश्रयइतियावत् । यत्रतत्रतंनयंतीतियोजना ॥ ५ ॥ नयनप्रकारमेवविवृण्वन्नाह ॥ एहीति ॥ आहुतयःस्वीकृताहुतयः। एषवःपुण्यइत्यादिकांप्रियांवाचमभिवदंत्योर्चयंत्यःसुवर्चसोदेवताः । स्वाधिष्ठितैःसूर्यस्यरश्मिभिःयजमानंएह्येहीत्युक्त्वावहंतीतियोजना ॥ ६ ॥ भगवत्पूजात्मकोपिकृतोयज्ञादिःसफलश्चे(दिरुक्तफलश्चे)तूकिमर्थंयज्ञादेस्तत्पूजात्मकत्वेनकरणमित्यतस्तद्रहितस्यस्वरूपंदर्शयति ॥ प्लवाइत्यादिना ॥ अष्टादशानामुक्तं अष्टादशोक्तं । अष्टादशचषोडशर्त्विजोयजमानःएतन्निरीक्षकःसभ्यश्च । येषु यज्ञेषु । अदृढत्वमेवस्पष्टमाह ॥ एतच्छ्रेयइति ॥ ७ ॥ जंघन्यमानाःवक्रगतयः । तत्रदृष्टांतमाह ॥ अंधेनेति ॥ ८ ॥ अविद्यावेष्टितत्वंचनैकप्रकारेणेत्याह ॥ अविद्यायामिति ॥ अविद्यावेष्टितत्वादिकंतेषांकुतोभवतीत्यतआह ॥ यत्कर्मिणइति ॥ स्वर्गादिरागात्ब्रह्मयन्नप्रवेदयंतिनजानंतितेनकारणेनेत्यन्वयः ॥ ९ ॥ क्षीणलोकाश्च्यवंतइत्युक्तंविशदमाह ॥ इष्टापूर्तमिति ॥१०॥ तान्याचरथनियतंसत्यकामाइत्यत्रज्ञानसाधनत्वप्रकारःकर्मादेःकथितः । तंप्रकारंविविच्याह ॥ तपइति ॥ तपःश्रद्धे उपवसंत्याचरंति । तपआदिनाअंतःकरणशुद्धिद्वाराविद्वांसोभवंतीत्यर्थः ॥ ११ ॥ कर्मादिप्रतिपादिकाऽपरविद्याभगवत्पूजात्वेनस्वोक्तानुष्ठानेपरविद्यासाधनमित्युक्तंपूर्वत्र । इदानींतुस्वर्गसाधनत्वेयागादेःसुखरूपत्वात्स्वर्गस्यचाल्पकालीनत्वान्नस्वर्गोमुख्यपुरुषार्थोतस्तत्रविरक्तोभवेदितिविरक्तिजननेनचपरविद्यासाधनत्वमपरविद्यायाइत्याह ॥ परीक्ष्येत्यादिना ॥ कर्मचिताँल्लोकान् । एतेदुःखसाध्याविनाशिनश्चेतिपरीक्ष्य । स्वरूपानंदाविर्भावरूपत्वादकृतोमोक्षःकृतेनकर्मणानास्ति किंतुज्ञानेन । तत्तस्माद्विज्ञानार्थंगुरुमेवाभिगच्छेत् ॥ १२ ॥ शमान्वितायाभगवन्निष्ठायुक्ताया येनयया प्रोवाचप्रवक्ति ॥ १३ खं० २ ॥

तदेतद्वक्ष्यमाणंसत्यं नमिथ्या । गुरूपदेशप्रकारमाह ॥ **यथासुदीप्तादिति** ॥ १ ॥ अक्षरस्यगुणान्वदन्नेवजगतइवतस्यापिन जननादिमंतव्यमित्याह ॥ **दिव्यइति** ॥ २ ॥ विश्वमितिकाचिद्देवता। वायुशब्देनप्राणोवायुरितिमुख्यप्राणस्योक्तत्वात् । आपः पृथिवीतिपृथिव्युत्पत्तिरुक्तासाकस्मादंगादित्यतआह ॥ **पद्भ्यांपृथिवीति** ॥ ४ ॥ यश्चसूर्यस्तस्मात्सोमाच्च । पर्जन्यौषधयः पृथिव्यांजाताः । अंगादुत्पत्तिमुक्त्वापुरुषात्स्त्रियामुत्पत्तिमाह ॥ **पुमानिति** ॥ बह्वीःबह्व्यः ॥ ५ ॥ ऋतवःपशुबंधयुक्तः॥ ६ ॥ नचैतस्माज्जायतेप्राणइत्यनेनपुनरुक्तिः। सप्तप्राणाइत्यस्यअत्रस्त्रियामुत्पत्त्युक्तेः। समिधोविषयाः ॥८ ॥ सर्वरूपाःसर्वदिङ्मुखाः ॥ ९ ॥ सृष्टिकर्मज्ञानादेर्भगवतोनित्यत्व(भिन्नत्व)शंकांनिवारयंस्तस्यतदैक्यमाह ॥ **पुरुषइति** ॥ विश्वंसर्वइदमित्युक्तंवि शदयतोक्तं विश्वंकर्मतपइति ॥ १० ॥ खं० ३ ॥ आविरित्यादिनाप्युपदेशप्रकारएवोच्यते । पद्यतेप्राप्यतइतिपदं । एजत्चे ष्टमानं । प्राणत्जीवत् । निमिषत्अक्षिपक्ष्मचलनवत् ॥ १॥ सदसद्वरेण्यंकार्यकारणाभ्यांश्रेष्ठं। प्रजानांचवरिष्ठं ॥२॥ वेद्धव्यंवि द्धिवेधयेत्युक्तंवेधप्रकारमाह ॥ **धनुरिति** ॥ औपनिषदंउपनिषत्सिद्धं ॥ ४ ॥ किंचधनुःकश्चशरइत्यतआह ॥ **प्रणवइति** ॥ तन्मयःतस्मिँल्लग्नः ॥ ५ ॥ यथाक्षरंप्राधान्येनध्येयंतथान्यदप्यस्तिकिमित्यतस्तन्महिमपूर्वनेत्याह ॥ **यस्मिन्द्यौरिति** ॥ ६ ॥ संहताःसंवद्धाः । विश्वादिरूपेणबहुधाजायमानः ॥७॥ यस्य यःसर्वज्ञइत्यादेरेषमहिमाभुविभूम्यादौप्रकटितःतमात्मानंध्यायत । तथासतितमसःपरस्तात्पराय वःस्वस्ति ॥८॥ ध्यानस्थानमाह॥ **दिव्यइति** ॥ ब्रह्मपुरेदेहे । दिव्येशरीरकोशेपिस्थानविशेषमाह ॥ **व्योम्नीति** ॥ व्योम्निआकाशे॥९॥ **मनोमयोज्ञानमयइति** ॥ अन्नेशरीरे । हृदयंसन्निधायअधिष्ठायस्थितः। तस्यदर्शनायोग्य

त्वेतद्ध्यानंव्यर्थमितिनमंतव्यमित्याह ॥ **तदिति** ॥ १० ॥ तद्दर्शनेनकिंभवतीत्यतःसंसारकारणाविद्याग्रंथ्यादिरपगच्छतीत्याह ॥ **भिद्यतइति** ॥ ११ ॥ एवंशरीरेउपास्तिस्थलमुक्त्वाब्रह्मांडमध्यस्थितसूर्याख्योपास्तिस्थलमाह ॥ **हिरण्मयइति** ॥ कोशे ब्रह्मांडे ॥ १२॥ सर्वसूर्यादिप्रकाशप्रकाश्यं ब्रह्मस्वरूपंतुकथमित्यतःस्वप्रकाशमित्याह ॥ **नतत्रेति** ॥ नकेवलंसूर्यादितेजोनब्रह्मप्रकाशकंकिंत्वन्यत्रापिप्रकाशकत्वंतदधीनमित्याह ॥ **तमिति** ॥ सूर्यादीनांतदनुप्रकाशत्वंचनस्वातंत्र्येणेत्याह ॥ **तस्येति** ॥१३॥ हृदयेसूर्येचतिष्ठतीत्युक्त्यापरिच्छिन्नत्वंप्रतीयते तन्निवारयति॥**ब्रह्मेति**॥ इदममृतंब्रह्मैवपुरस्तादित्यादिपृथग्वाक्यतयायोज्यं।ब्रह्मशब्दबाहुल्यात्॥१४॥ खं०४॥ सएषोंतश्चरतेबहुधाजायमानइत्युक्तंबहुधाजायामानत्वंकिंजीवात्मकत्वेन नेतिभावेनतयोर्भेदमाह ॥ **द्वेति** ॥ उपकार्योपकारकभाववत्तयापरस्परमपरिहारेणवर्तमानौसयुजौ। जीवस्यसंसारकारणमविद्यादिकमुक्तं प्रधानकारणमाह॥ **समानइति** ॥ १ ॥ तस्यशोकनिवर्तकंकिमित्यतोभेदपूर्वंतन्महिमज्ञानमित्याह॥ **जुष्टमिति** ॥ इति पूर्वोक्तप्रकारेणास्यमहिमानंच यदापश्यतितदावीतशोकोभवति॥२॥ पूर्वमंत्रार्थमेवविशदमाह ॥ **यदेति** ॥३॥ पुण्यपापेविधूयनिरंजनइतिजीवन्मुक्त्यवस्थासूचिता। तत्प्रकारमाह॥ **प्राणइति** ॥ योजनातु विद्वानतिवादीनभवति। कस्मा त्सर्वभूतैरिंद्रियादिभिरेषमाणएवविभाति। अहमस्तंत्रइतिविजानन्यतः। अतिवादीनचेत्कथंतिष्ठतीत्यतआह ॥ **आत्मक्रीडइति** ॥ ४ ॥ प्रकृतेश्वरप्राप्तेःज्ञानंसाधनं ज्ञानस्यध्यानंसाधनमुक्तंतत्सहकारीण्याह ॥ **सत्येनेति** ॥ ब्रह्मचर्येणगुह्येंद्रियनियमेन। क्षीणदोषत्वंचकारणांतरमितिसूचयति ॥ **क्षीणेति** ॥ ५ ॥ तत्सर्वथाभाव्यंमुमुक्षोरित्याशयेनसत्यंस्तुवंस्तद्भावेपीश्वरबहिर्मुखस्यनमोक्षइत्याह ॥ **सत्यमिति** ॥ सत्यनिष्ठइ

त्यर्थः ॥ यत्रलोकेसत्यस्यपरमात्मनःपरमंसन्निधानंतंलोकंप्रतियेनपथाआप्तकामाऋषयःआक्रमंतिगच्छंति । अयंपंथाःसत्येनवित
तः ॥ ६ ॥ सत्येनपंथाविततइतिसत्यंमोक्षदात्रित्युक्तं तस्कोतिशयोयेनमोक्षदातृत्वमित्यतआह ॥ बृहद्दिति ॥ ७ ॥ चक्षुरा
दिदेवोपास्तिप्रभावात्भगवज्ज्ञानंभवतिकिमित्यतोनेत्याह॥ नचक्षुषेति ॥८॥ तंपश्यतइत्युक्तंचक्षुरादिभिर्नपश्यतिचेत्कथंतर्हि
ज्ञानप्रसादेनेत्युक्तंमनसाचेत्याह ॥ एषइति ॥ योजनातु प्रजानांसर्वंचित्तंप्राणैःसहयस्मिन्विशुद्धेप्राणेओतंसएषआत्मास्वामी
प्राणोयस्मिन्पंचधासंविवेशआश्रितस्तिष्ठतिविभवतिच । सएषोणुःपरमात्माचेतसावेदितव्यइति ॥ ९ ॥ प्रकृतजीवन्मुक्तस्यव
स्थाप्रकारमेवाह ॥ यंयमिति ॥ संविभाति भावयतीच्छतीतियावत् ॥ १० ॥ खं० ५ ॥ आत्मज्ञार्चकःभूतिमान्भवतीत्युक्तां
भूतिमेवाह ॥ सवेदैतदिति ॥ अकामाःशुक्रंगंतुंअन्यत्अतिवर्तंते ॥ १ ॥ अकामाइत्यस्यव्यावर्त्यमाह ॥ कामानिति ॥ का
मान्भद्रान्मन्यमानः ॥ २ ॥ नचक्षुषापश्यतीत्यत्रान्यसामर्थ्याद्भगवंतंनपश्यति किंतुज्ञानप्रसादेनेत्युक्तंविशदमाह ॥ नायमि
ति ॥ ३ ॥ तर्हिप्रवचनादेवैयर्थ्यंकिंनेत्याह ॥ नायमिति ॥ बलहीनेनश्रवणमननबलहीनेन । अलिंगात्प्रमाणाद्युक्तात् ॥ ४ ॥
विशतेब्रह्मधामेतिआत्माज्ञायतइत्युक्तं तज्ज्ञानमहिमानमाह ॥ संप्राप्येति ॥ ५ ॥ मोक्षःकिंज्ञानानंतरमेवभवतिनेत्याह ॥ वे
दांतेति ॥ वेदानांअंतात्युक्त्यनुसंधानरूपात्जातविज्ञानेनसम्यग्विषयीकृतार्थाः । परामृतात् प्रकृतेः ॥ ६ ॥ मुक्तिप्रकारंदर्श
यति ॥ गताइति ॥ ७ ॥ एकीभवनप्रकारमेवदृष्टांतेनाह ॥ यथानद्यइति॥ अस्तमदर्शनं ॥ ८ ॥ एतदुपनिषद्वेत्तुःफलमाह
॥ सयइति ॥ ब्रह्मैवभवतीत्युक्तंब्रह्मभवनमेवविशदमाह ॥ तरतीत्यादिना ॥ ९ ॥ अस्यामुपनिषदिकोधिकारीत्यतःश्लोके

नवदन्नाह ॥ **तदेषश्लोकइति** ॥ श्रद्धयंतः । एकप्रकारेणश्रद्धापूर्वमर्चयंतः ॥ १० ॥ स्वोक्तमृषिणोक्तमित्याह ॥ **तदेतदि
ति** ॥ तदेतदृष्युक्तंसत्यमित्यर्थः। वेदपुरुषःउपनिषदंऋषिप्रणामेनसमापयति ॥ **नमइति** ॥ **इत्याथर्वणोपनिषन्मंत्रार्थः** ॥७॥
**अथभाष्यार्थः** ॥ अथर्वायज्येष्ठपुत्रायेतिअथर्वणोब्रह्मणोज्येष्ठपुत्रत्वमुक्तं। तद्रुद्रादेःप्रथमपुत्रत्वोक्त्याविरुद्धमतोविरोधंव्यवस्थो
क्त्यापरिहरति ॥ **मनोरिति** ॥ वैवस्वतस्यमनोरंतरे अथर्वाआदौब्रह्मणोऽजनि । अथोअनंतरमेवमित्रादयश्चजाताः । वाराहे
कल्पे । प्रथमइतिग्राह्यं । यथासनकादीनांप्रथमजत्वंकल्पांतरेतथाकिंब्रह्मणोपिविष्णोःप्रथमजत्वमित्यतआह॥ **ब्रह्मेति** ॥ १–४॥
तत्रापराऋग्वेदोयजुर्वेदइत्युक्त्वाअथपरायतदक्षरमधिगम्यतइत्युक्तत्वादृगादिव्यतिरिक्तापरविद्येतिप्रतीयते । परैस्तथाव्या
ख्यातत्वाच्चातस्तांनिवारयन्नाह ॥ **ऋगाद्याइति** ॥ आपाततःप्रतीतार्थतयायदाविष्णोःनवाचकाः । परमयोगरूढ्यावाच
काःऋगादयःसाकल्येनभगवत्प्रतिपादकाइत्युक्तंतत्प्रमाणैर्द्रढयति ॥ **ऋग्भिरिति** ॥ हौत्रेण हौत्रेकर्मणि । स्तुवंति । सामभि
रितिशेषः । एवंभूतास्तेभागवतोत्तमाइतिसंबंधः । ननूदाहृतप्रमाणेनवेदादेर्नसाकल्येनभगवत्परत्वंसिध्यति । होत्रादयःइंद्रादि
वत् भगवत्परवाक्येनशंसनंकुर्वंतीत्यर्थोपपत्तेरित्यतोनिरवकाशप्रमाणानिपठति ॥ **वेदइति** ॥ एतद्ब्रह्मैवांतादावुक्त्वाविजानता
मेवेत्यन्वयः। इतिहासपुराणानांपंचमत्वेनऋगादिपंचधासंस्थं। वाकानुवाकायजुर्वेदवाक्यविशेषाः। निषदित्याथर्वणवाक्यविशेषाः।
सत्येषु यथार्थप्रतिपादकेषु। आमनंति प्रतिपादयंति। सर्वाणितपांसिचयत्प्रतिवदंति । ऋगादयएवभगवत्प्रतिपादकाःपरविद्यानातो
न्यास्तीत्यत्रप्रमाणांतरंचाह ॥ **चतुर्दशेति** ॥ पुराणन्यायमीमांसाधर्मशास्त्रंचेतिचत्वारि षडंगानि ऋगाद्याश्चत्वारइतिचतुर्दशमहा

विद्याःपरविद्याचेत्येकोर्थः । अतःप्रकृतेर्थेमानंभवति। विप्रतिपत्तिभावात्तत्रैवमानांतरंपठति॥ पंचरात्रमिति॥ एतत्सर्वंएकमेकविषयं । कथमेकंपुराभवत् इंद्रादिनाम्नामिंद्रादिवाचकत्वादित्यतआह॥ नैवेति॥ तर्हिवेदैर्हरिरेवेज्यःनत्वन्यइतिप्राप्तमित्यतःसत्यमित्याह॥ देवतात्वेनेति॥ तर्हिब्रह्मादियजनाभावःप्राप्नोतीत्यतआह॥ ब्रह्माद्याइति॥ भगवत्पूजाकारित्वेन।तस्माद्देवतात्वेनभगवत्पूजाकर्तृत्वात् । तस्माद्वेदेप्रतिपाद्यभेदाभावात्परविद्यापरविद्येतिपारावर्यंकिंचननास्ति । वक्तृभेदाभावाच्चपारावर्यंनास्तीत्याह॥ यस्मादिति ॥ सर्वैर्वेदैर्हरियजनस्यकर्तृत्वेवृद्धकृतिंचाह ॥ तस्माद्ब्रह्मादयइति ॥ तर्हिसर्वैर्वेदैर्हरियजनेऽशक्तस्यतत्रतूष्णींभावःप्राप्तइत्यतआह ॥ अशक्तइति ॥ भिन्नैरृगाद्यैरितित्रेतायांवेदभेदउक्तः तमेवविशदमाह ॥ एकइति ॥ कृतेसर्ववेदैर्हरिंयजंति त्रेतादौऋगाद्येकदेशेनेत्युक्तं । एवंतर्हित्रेतादावपिसर्ववेदैर्हरियजनेशक्तस्यऋगाद्येकदेशेनहरिपूजामुख्याकिमित्यतोनेत्याह॥ मुख्यइति ॥ त्रेतादावपिसर्ववेदैर्हरियजनस्यधर्मत्वेकथंऋगाद्यैरेवसत्रैतैरित्यादिनाविभज्यधर्मोक्तिरित्यतोशक्तविषयत्वान्नविरोधइत्याह ॥ त्रेतादाविति ॥ तात्पर्यद्योतनायोक्तंपुनरेवाह ॥ कृतइति ॥ वेदःपुरुषशक्त्यल्पत्वापेक्षयात्रेतादौशब्दतोर्थतश्चह्रसतीत्युक्तं । तत्रभारतवचनंपठति ॥ वेदवादाइति ॥ऋगादीनामेवपरविद्यात्वे नप्रमदितव्यमितिभावेनतत्रमानांतरंपठति॥ वेदैरिति ॥ एतदुपनिषदःपूर्वोत्तरपर्यालोचनयाऋगादेरेवविवक्षाभेदेनपरविद्यात्वंसमर्थयते ॥ अत्रापीति॥मंत्रात्मिकामेवकर्मविषयामितिग्राह्यं । आथर्वणान्मंत्रानेव । इतोपिऋगादयएवविवक्षाभेदेनपरविद्याःनकेवलमुपनिषदित्याह ॥ चतुर्वेदेति ॥ चतुर्वेदसंस्कारवतांस्वशाखाध्ययनार्थंकृतसंस्कारवतामेवस्वशाखोपनिषद्विद्यायामधिकारउक्तः । संहितोपनिषदोर्भिन्नविद्यात्वे

कार्यैक्यंनस्यादित्यर्थः । संहिताध्ययनसंस्कारएवोपनिषदादिसर्ववेदसंस्कारइतिकुत्रोक्तमित्यतस्तद्वाक्यंपठति ॥ तेषामि ति ॥ अत्रस्वशाखासंहिताध्ययनार्थंचीर्णशिरोव्रतेनस्वस्वशाखोपनिषदाद्यधिकारोस्तीत्येतत्सर्ववेदाध्ययनाधिकारोस्तीत्येत स्योपलक्षणत्वेनोक्तमित्यर्थः । उपलक्षणत्वेनोक्तमितिकुतोवगतमित्यतस्तज्ज्ञापकंप्रमाणंपठति ॥ स्वबेदेति ॥ तपसा चीयतेब्रह्मेत्युक्तंब्रह्मतस्मादेतद्ब्रह्मनामेत्युक्तमितिप्रतीतिंनिवारयति ॥ एतद्ब्रह्मचतुर्मुखइति ॥ खं० १ ॥ तदेतत्स त्यंमंत्रेष्वित्यत्रसत्यंयथार्थमितिप्रतीयते तानिवारयति ॥ तदेतदिति ॥ सत्यकामाइत्यत्रापिअन्यथाप्रतीतिंनिवारयनअ न्वयंदर्शयन्अभिप्रायमाह ॥ तदिति ॥ तत्कामाःसत्यनामकभगवत्कामाः । प्लवाह्येतेअदृढायज्ञरूपाइत्यत्रकर्मणांनिंदि तत्वात् । भगवत्कामाःकर्माण्याचरेथेतिकथंव्याख्यानंयुक्तमित्यतस्तस्यभावार्थमाह ॥ अन्यथेति ॥ कर्मणांभगवद्विषय त्वाभावेइत्यर्थः । एषवःपुण्यइत्यत्रयज्ञादिसामर्थ्यादेवब्रह्मलोकोभवतीतिप्रतीयतेतांनिवारयन्नाह ॥ भगवदिति ॥ कृतेक र्मणीतिशेषः । ब्रह्मलोकःचतुर्मुखलोकइतिप्रतीतिंनिवारयति ॥ परेति ॥ भगवद्विषयतयाकर्मकर्तुःपरब्रह्मप्राप्तिभर्वतीति कुतःसिद्धं । येनकर्मतथाकरणीयमित्यतआह ॥ निष्काममिति ॥ कर्मेतिग्राह्यं । तत्रैवार्थेश्रुतिंपठति ॥ सयइति ॥ लोकमा श्रयं । ननुमुमुक्षोःकर्मैवनापेक्षितं मोक्षस्यनैष्कर्म्यसिद्धत्वादित्यतआह ॥ सहेति ॥ सहयज्ञाइत्युपक्रम्यस्वकर्मकर्तुश्चक्रप्रवर्तकत्वे न मुच्यंतेतेपिकर्मभिरितिफलमुक्त्वा एवंप्रवर्तितंचक्रमितिस्वकर्माकरणेन चक्राप्रवर्तकस्यनिंदितत्वाच्चनमुक्तेःकर्मानपेक्षेत्यर्थः। मुमुक्षोर्ब्रह्मप्राप्त्यैसर्वथाकर्मणाभाव्यमित्येतत्प्रमाणांतराभ्यांसमर्थयते ॥ यांतीति ॥ अहंहीति ॥ यद्वास्वकर्मभगवद्विषयंकृ

तंतत्प्राप्तिकारणमित्येतत्प्रमाणाभ्यांद्रढयन्नाह ॥ **यांतीति** ॥ **अहंहीति** ॥ ननुमुमुक्षोर्ज्ञानिनःस्वकर्मनापेक्षितं । तस्ययस्त्वा त्मरतिरेवस्यादित्यत्रतन्निषेधादिति । मैवं । तस्यमुक्तविषयत्वात् । कुतएवंकल्प्यमित्यतआह ॥ **यस्त्विति** ॥ यस्त्वात्मरातिरित्यु क्त्वाप्युत्तरत्रकुर्याद्विद्वानित्युक्तत्वात्तन्मुक्तविषयमवगम्यतइत्यर्थः । कुर्याद्विद्वानितिविधिसरूपं नविधिः । अकरणेबाधकाभावा दित्यतआह ॥ **येत्विति** ॥ ननुमुमुक्षोःकर्मणःकर्तव्यत्वेयत्याश्रमिणस्तदभावात्तस्यमोक्षोनस्यादित्यतोविरोधंव्यवस्थापकवाक्यंप ठित्वाशमयति ॥ **लोकइति** ॥ अस्मिँल्लोके द्विविधामुमुक्षुजनाःसंति । ज्ञानयोगिनःकर्मयोगिनश्चेति । ज्ञानप्रचुरयोगेनसांख्या नांसनकादीनांज्ञानयोगिनांनिष्ठापुरामयाप्रोक्ता । कर्मप्रचुरयोगेनजनकादीनांकर्मयोगिनामितिनिष्ठाद्वयस्योक्तत्वात् यतेरपि स्वाश्रमोचितकर्मभावान्नोक्तविरोधइत्यनुवदंस्त्रेतायामित्यस्यव्यावर्त्यमाह ॥ **त्रेतायामिति** ॥ एकप्रकारेण एकविषयकत्वे न । एकप्रकारेणसंततत्वंसाधितमपिप्रसंगात्प्रमाणांतरेणद्रढयति ॥ **अग्निष्टोमेति** ॥ ननुकथंकृतेकर्मणामेकविषयत्वेनसंततत्वं । इंद्रादिनामभिर्यजनादित्यतआह ॥ **यमिंद्रमिति** ॥ एभ्यः एभिर्देवैःसह । तस्मैजुहोमि । इंद्रादिनाम्नांविष्णुवाचकत्वाद्देवादीनां कंचुकमात्रत्वात्कर्मणामेकविषयत्वंयुक्तमित्यर्थः । इमंलोकंहीनतरंवालोकंविशंतीत्यस्यैकविषयत्वमगम्यतेतदयुक्तंहीनोत्तमत्वा ल्लोकयोः । अतःकइमंलोकंविशतिकोवाहीनतरंइत्यतआह ॥ **विष्णोरिति** ॥ उक्तार्थंप्रमाणेनद्रढयति ॥ **देवेभ्यइति** ॥ त्रैवि द्यामामित्यत्रमांसम्यक्ज्ञात्वायजतामपिमर्त्यलोकप्राप्त्युक्तेः राजवद्यस्तुमन्यते । याजीसमानुषंयातीतिविशेषोक्तिरयुक्तेत्यत आह ॥ **त्रैविद्याइति** ॥ त्रैविद्यामामितिवाक्येउक्तास्तुत्रैविद्याअज्ञानपूर्वयाजिनः । कुतः । येप्यन्यदेवताभक्तास्तेपिमामे

वयजंतिकिंतुअविधिपूर्वकंयजंति । कथमविधिपूर्वकत्वंयजनस्येत्यतोऽहंहिसर्वयज्ञानांभोक्ता नतुमामभिजानंतितत्वेनातश्च्यवं तितेइत्युक्तत्वादितियोजना।अज्ञत्वाद्यजनान्मर्त्यलोकप्राप्तिः अतोविशेषोक्तिर्नायुक्तेतिभावार्थः॥खं० २॥अक्षरात्परतइत्युक्तंपरतोक्ष रात्परत्वं ययातदक्षरमधिगम्यतइत्युक्ताक्षरादितिप्रतीयते । तद्युक्तं तस्यपरविद्याविषयत्वादतोविरोधंव्यवस्थापकप्रमाणेनप रिहरति ॥ अपरमिति ॥ परतोक्षरात् । अग्निर्मूर्धेतिसामानाधिकरण्यप्रयोगादैक्यप्रतीतिंनिवारयति ॥ विष्णिवति ॥ उप निषदंतरेद्यौर्मूर्धेतिपाठभावात्तदनुसार्येवैतद्वचनमितिज्ञातव्यं । अनेनभगवतोमूर्धाग्निरग्निनामकः । अग्निश्चभगवन्मूर्ध्निअग्निना मकेजातत्वादग्निनामेत्यादियोजनासूचिताभवति । पुमान्रेतःसिंचतीत्यस्यप्रकृतसृष्ट्यासंगत्यभावप्रतीतिंनिवारयन्नाह ॥ वासु देवइति ॥ अप्रतीतेरर्चिर्होमलोकगुहाशयाशब्दानामर्थानाह ॥ सप्तेत्यादिना ॥ इंद्रियवृत्तयः समिदाख्यविषयसंबंधाः । बुद्धौबुद्ध्यर्थं। सप्तमीत्वेगुहाशयायामितिस्यादित्यतआह॥लोपइति॥ समानेवर्णेपरतःपूर्वस्यलोपोभवति । सप्तसप्तेतिवीप्सायां। अन्वयंप्रदर्शयति॥ प्रतिपुरुषमिति॥बुद्ध्यर्थंप्रतिपुरुषंसप्तसप्तनिहिताइत्यन्वयः। पुरुषएवेदंविश्वंकर्मेत्यत्रेदंविश्वंजगत्तत्कर्मादि चब्रह्मेतिप्रतीयतेतांनिवारयंस्तदर्थमाह ॥ भगवतइति ॥ भगवच्चेष्टादेस्तत्स्वरूपत्वंसमाख्याश्रुतिस्मृतिभ्यांसमर्थयते ॥ यैषे ति ॥ स्वाभाविकीति ॥ खं० ३ ॥ परंविज्ञानादित्युक्तंविज्ञानंकिमितिनज्ञायतेऽतस्तदाह ॥ विज्ञानादिति ॥ ब्रह्मणोवि ज्ञानशब्दवाच्यत्वंहरेस्तत्परत्वंचकुतःसिद्धमित्यतस्तत्रप्रमाणसंमतिमाह ॥ नाभीति ॥ सप्राणस्तदुवाङ्मनइत्यत्रप्रसिद्धप्राणाद्ये कत्वप्रतीतिंनिवारयन्प्राणादिशब्दान्निर्वक्ति ॥ प्राणइति ॥ अमृतस्यैषसेतुरित्यत्रजडामृताश्रयत्वप्रतीतिंनिवारयन्नाह ॥ अमृत

स्येति ॥ सेतुराश्रयः । तत्रामृतशब्दोक्तामुक्ताइतिकुतइत्यतआह ॥ ॐमुक्तेति ॥ यस्मिन्द्यौःपृथिवीचांतरिक्षमित्यत्रपृथिव्या द्याश्रयत्वेनोक्तःपरमात्मेतिकुतइत्यतःमुक्तप्राप्यत्वलिंगोक्तेरितिसूत्रकृतोक्तत्वादित्यर्थः । भवेदेतद्भगवतोमुक्ताश्रयत्वंयदिसिद्धं स्यात् तदेतत्कुतइत्यतआह ॥ मुक्तानामिति ॥ परमात्मैवजाग्रत्स्वप्नसुषुप्त्यवस्थासुबहुधाजायमानोजीवःसन्शरीरांतश्चरती तिप्रतीतिंनिवारयंस्तद्वाक्यंव्याचष्टे ॥ हृदयस्थइति ॥ ब्रह्माद्यात्मकत्वेनपरेऽस्मदाद्यात्मकत्वेनावरइत्यन्यथाप्रतीतिंवारयंस्तत्पदं व्याचष्टे ॥ पराइति ॥ हिरण्मयइत्यत्रज्योतिषांज्योतिरितिसूचितंब्रह्मोपास्तेरधिष्ठानंकिमित्यतस्तद्वाक्यंव्याचष्टे ॥ ब्रह्मांडेति ॥ नतत्रसूर्योभातीतिसूर्यादयस्तदेकीभूतत्वात्पृथक्नभांतीतिप्रतीतिंनिवारयति ॥ सूर्यादयइति ॥ ब्रह्मैवेदंविश्वमिदंवरिष्ठमित्येत द्ब्रह्मणोविश्वाकारत्वप्रतीतिंनिवारयन्व्याचष्टे ॥ इदमिति ॥ इदंविश्वंब्रह्मैवेतिइदंशब्दोजगत्परएवकस्मान्नस्यादित्यतआह ॥ इदंशब्दानामिति ॥ जगत्परत्वेएकेनैवपूर्णत्वादितरवैयर्थ्यमितिभावः ॥ खं० ४ ॥ तयोरन्योजीवःस्वाद्वेवपिप्पलंदेहाख्या श्वत्थवृक्षस्यपुण्यकर्मफललक्षणंफलमत्ति नत्वस्वादुपापफलंदुःखमितिप्रतीतिंनिवारयन्व्याचष्टे ॥ स्वादुवदिति ॥ अस्वाद्व वस्वादुवदत्ति । नतुस्वाद्वेवात्तीत्यर्थः । कुतोनजीवःस्वाद्वेवात्तीत्यतआह ॥ तस्येति ॥ तस्यार्थः योऽग्रे श्रेष्ठः । तस्यैवस्वादु पिप्पलमाहुः । यःउत् उत्कृष्टं । पितरंनवेद अतएवनशत्नाशवान्तस्यतत्स्वादुपिप्पलंनेति । अनश्नन्नितिसर्वथाऽभोक्तेतिप्र तीयते । तांनिवारयति ॥ जीवाद्यंदुःखमिति ॥ नतुनाश्नात्येवेतिकुतइत्यतआह ॥ तस्येति ॥ तर्हिश्रुत्योर्विरोधःप्राप्तइत्य तोविरोधंपरिहरति ॥ स्वातंत्र्येणेति ॥ अनीशयास्वस्यानीश्वरत्वभावनयेतिप्रतीतिंनिवारयन्तत्प्रमाणेनव्याचष्टे ॥ नास्तीति ॥

कुतःपरमात्माजीवादन्यइत्यतःप्राप्तमीशमिति तद्याचष्टे ॥ जीवादन्यइति ॥ यतःस्वतंत्रोऽतोजीवादन्यइतियोज्यं । पुण्य
पापेइतिसर्वपुण्यपापविधूननप्रतीतिंनिवारयन्नाह ॥ पुण्यंचानिष्टमिति ॥ इष्टपुण्यविधूननस्यज्ञानफलत्वानुपपत्तेरितिभावः ।
सत्यमेवंजयतिनानृतमित्येतत्प्रसिद्धसत्यानृतपरत्वप्रतीतिंनिवारयन्व्याचष्टे ॥ सत्यइति ॥ एकस्यैकदैवसमीपस्थत्वदूरस्थत्वेक
थं विरोधादित्यतस्तंविरोधंपरिहरति ॥ सर्वगत्वादिति ॥ नचक्षुषागृह्यतेनापिवाचेत्येतच्चक्षुरादिप्रतीतिंनिवारयन्व्याचष्टे ॥
नान्यैरिति ॥ ज्ञानप्रसादेनमनसाचपश्यतीत्येतत्प्रसिद्धज्ञानमनःप्रतीतिंनिवारयन्व्याचष्टे ॥ ज्ञानरूपेणेति ॥ निष्कलमित्ये
तत्करचरणाद्यभावप्रतीतिंनिवारयन्व्याचष्टे॥ षोडशेति ॥ करचरणादिराहित्यमेवार्थःकिंनस्यादित्यतोबाधकमाह ॥ यदेति ॥
खं० ५ ॥ सवेदैतदित्यत्रतच्छब्दपरामृष्टःकइत्यतआह ॥ प्रधानमिति ॥ आविष्टोभवतीत्युक्तमावेशमेवविशदमाह ॥ नित्य
मिति ॥ प्राणस्यप्रधानधामत्वात्प्राणद्वाराज्ञानदातृत्वरूपत्वादावेशस्यनोक्तविरोधइतिभावः । ननुपूर्वंसतएवकिंचिदतिशयकर
णेनाविष्टव्यवहारगोचरत्वंकुत्रदृष्टमित्यतआह ॥ सन्निधानमिति ॥ पूर्वोपिरवधारणार्थः । तथासतियोजना । पुरुषेषुसन्निधानं
प्राप्ताएवपिशाचाःस्वतःस्थित्वाविषयान्भुंजानाअपिपुनश्चतेमंत्रादिभिराविशंतीतियथातथाविष्णुरित्यादि । एतच्छुक्रंशोकरहितं
अतिक्रम्यवर्ततइत्यन्यथाप्रतीतिंनिवारयति ॥ एतदिति ॥ प्रति गंतुमितिशेषः । शुक्रमतिवर्ततइत्येवार्थःकिंनस्यादित्यतोबाध
कमाह ॥ सर्वमिति ॥ तेसर्वगमितिवाक्यंअर्थाप्रतीतेर्व्याचष्टे ॥ सर्वतइति ॥ अपियंति प्रविशंति । उक्तमर्थंप्रमाणेनद्रढयति ॥
देहादेरिति ॥ तेब्रह्मलोकेषुमुच्यंतइत्यन्यथाप्रतीतिंनिवारयन्व्याचष्टे ॥ ब्रह्मेति ॥ एकीभवंतीत्येतत्ऐक्यप्रतीतिंनिवारयन्

व्याचष्टे ॥ अविरोधइति ॥ कुतःस्वरूपयोर्नैकीभावोर्थइत्यतःच्विप्रत्ययलब्धामुपपत्तिमाह ॥ कुतइति ॥ प्रागेकत्वेनाभू
तस्यपश्चादेकत्वभवनंकुतःस्यान्नकुतोपीत्यर्थः । नन्वनेनोत्तरत्रापिजीवःपरमात्मनोभिन्नःपूर्वंततोभिन्नत्वादित्युक्तंभवति । तस्ये
श्वररूपेष्वनैकांत्यमित्यतस्तत्परिहरति ॥ स्वरूपस्यैक्यमेवहीति ॥ पूर्वमपितेषांस्वरूपैक्यमेवहि । अतस्तत्रनोक्तहेतुवृत्तिरि
तिभावः । तर्ह्येकीभाववाक्यानांकागतिरित्यतोऽविरोधादिरित्युक्तंदृष्टांताभ्यामाह ॥ अतइति ॥ पूर्वंभिन्नस्यपश्चादैक्यायोगान्न
दीनांअब्धिना जीवानांहरिणाचैकीभावस्तुसंश्लेषः । परस्परविरुद्धानांनरांतरैरेकीभावो विरोधस्यवर्जनमित्यर्थः । हेतुमेवविव
रितुमाह ॥ स्वरूपैक्यमिति ॥ पूर्वं नित्यभिन्नस्वरूपिणां । नन्वेकीभावोनामसंश्लेषएवनत्वैक्यमितिनयुक्तं । हरेरूपाणांएकीभा
वोक्तेरैक्यार्थत्वस्यांगीकर्तव्यत्वादित्यतआह ॥ हरेरपीति ॥ हरेरूपाणामेकीभावोयदोच्यतेतत्रापिसंश्लेषएवोच्यते । नत्वैक्यमि
तिकुतइत्यतआह ॥ सिद्धत्वादिति ॥ पूर्वमेवतेषांस्वरूपैक्यस्यसिद्धत्वात्पश्चात्स्वरूपैक्यस्यनोभवः। अतःसंश्लेषएवभगवद्रूपाणां
एकीभावोक्तेरर्थइत्यर्थः । गताःप्राप्ताइत्यन्यथाप्रतीतिंनिवारयंस्तस्यवाक्यस्ययोजनाप्रकारंदर्शयति ॥ गताइति ॥ कलादेवादिदे
वाःसंसारिणःप्रतिष्ठाःनियामकाःसंतःतन्मुक्त्यवसरेमुक्ताःसंतःमुक्तस्यापितस्यनियामकास्तिष्ठंतीतिभावार्थः ॥ वाक्यार्थप्रमाणेन
द्रढयति॥प्रतिबिंबइति ॥कलाःकलादेवताः। मुक्तेष्वपीत्युत्तरत्रापिशब्दसंबंधः। ननुकर्मणोपिकलात्वात्षोडशेत्यनुक्त्वापंचदशे
त्युक्तिःकस्मादित्यतआह ॥ कलाभ्यइति॥ गतामुक्ताइतिस्वव्याख्या। अन्येषांतुकलाजडरूपाःजीवेभ्यःमुक्त्यवसरेगताभविष्यं
ति । सर्वदेवाश्चप्रतिदेवतासुस्वमूलरूपेषुगताभविष्यंतीति । तांदूषयति ॥ अन्यथापव्याख्यानइति ॥ प्रतिदेवतास्वित्यस्यप्र

तिबिंबभूतास्वितिस्वव्याख्यानंकथमित्याह॥ **प्रतिरूपेति** ॥ कलादेवाइतिकुतोवगतमित्यतआह॥**विज्ञानेति** ॥ सप्राणमसृजते त्यादिनाभगवदुत्पन्नासुकलासु विज्ञानात्मासहदेवैश्चसर्वैरितिदेवशब्दप्रयोगादित्यर्थः। यथासोम्येमाःसमुद्रायणाःसमुद्रंप्राप्येतिन दीदृष्टांतपूर्वकंइमाःषोडशकलाःपुरुषायणाःपुरुषंप्राप्यास्तंगच्छंतीतिजडेनुपपन्नपुरुषप्राप्तिलक्षणमुक्तिकथनाच्चगताःकलाइतिमुक्ता देवाएवोच्यंतइत्यर्थः। पुरुषंप्राप्येत्युक्तेःपुरुषोजीवश्चेत्कथंतंप्राप्तानांमुक्तत्वमित्यतआह ॥ **सइति** ॥ सप्राणमसृजतेत्यादेर्वाक्या त्पुरुषस्यप्राणादिस्रष्टृत्वावगमात्पुरुषोभगवान्। नद्यःसमुद्रंप्राप्यास्तंगच्छंतिनामरूपेविहाय तथानामरूपाद्विमुक्तइत्येतत्समुद्रंप्रा प्तानांनदीनां भगवंतंप्राप्तानांमुक्तानांच नामरूपाभावप्रतीतिंनिवारयन्व्याचष्टे ॥ **अगम्येति** ॥ समुद्रंप्राप्तानांनदीनां नामरूपयोःमहद्भिर्ज्ञायमानत्वाच्च न नामरूपाभावस्तासामित्याह ॥ **स्वकीयमुदकंनद्यइति** ॥ प्रकारांतरेणविमुक्तपदंव्याकरो ति ॥ **विमुक्तइति** ॥ वीत्युपसर्गस्यनिषेधार्थत्वंक्वोपलब्धमित्यतःप्रयोगंदर्शयति ॥ **विप्रियइतिवादिति** ॥ नामरूपेविहायेत्य स्यपदविभागप्रदर्शनेनचनामरूपराहित्याभावमर्थमाह ॥ **अविहायेतिचेति** ॥ ननुनामरूपेइत्यस्यप्रगृह्यत्वेनप्रकृतिभावावश्यं भावात्संध्यभावात्कथमविहायेतिपदविभागइतिचेन्न। मणीवादिवदुपपत्तेः मुक्तानांनामवत्त्वंश्रुत्यासमर्थयते ॥ **अनंतमिति** ॥ मुक्तानांनामअनंतमविनाशीतिश्रुतिभावाच्चनमुक्तानांनामाभावइत्यर्थः। ब्रह्मवेदब्रह्मैवभवति परब्रह्मैवभवतीत्यन्यथाप्रतीतिंनि वारयन्व्याचष्टे ॥ **परंब्रह्मेति** ॥ स्वयोग्यतोपबृंहितत्वमेवजीवस्यब्रह्मत्वमित्यत्रप्रमाणांतरंपठति ॥ **ब्रह्मत्वमिति** ॥ उपक्रमा नुगुणश्चायमेवार्थइत्याह॥ **यत्रेति** ॥ सूत्रानुसारित्वाच्चायमेवार्थइतिभेदसूचकानिसूत्राणिपठति ॥ ॐमुक्तोपसृप्येति ॥ मुक्त

तिबिंबभूतास्वितिस्वव्याख्यानंकथमित्याह॥ प्रतिरूपेति ॥ कलादेवाइ
त्यादिनाभगवदुत्पन्नासुकलासु विज्ञानात्मासहदेवैश्चसर्वैरितिदेवशब्दप्रयो
दीदृष्टांतपूर्वकंइमाःषोडशकलाःपुरुषायणाःपुरुषंप्राप्यास्तंगच्छंतीतिजडेनु
देवाएवोच्यंतइत्यर्थः । पुरुषंप्राप्येत्युक्तेःपुरुषोजीवश्चेत्कथंतंप्राप्तानांमुक्त
त्पुरुषस्यप्राणादिस्रष्टृत्वावगमात्पुरुषोभगवान्। नद्यःसमुद्रंप्राप्यास्तंगच्छं
प्तानांनदीनां भगवंतंप्राप्तानांमुक्तानांच नामरूपाभावप्रतीतिंनिवारय
नामरूपयोःमहद्भिर्ज्ञायमानत्वाच्च न नामरूपाभावस्तासामित्याह ॥ स्व
ति ॥ विमुक्तइति ॥ वीत्युपसर्गस्यनिषेधार्थत्वंक्वोपलब्धमित्यतःप्रयोगं
स्यपदविभागप्रदर्शनेनचनामरूपराहित्याभावमर्थमाह ॥ अविहायेति
भावात्संध्यभावात्कथमविहायेतिपदविभागइतिचेन्न । मणीवादिवदुपपन्
मुक्तानांनामअनंतमविनाशीतिश्रुतिभावाच्चनमुक्तानांनामाभावइत्यर्थः
वारयन्व्याचष्टे ॥ परंब्रह्मेति ॥ स्वयोग्यतोपबृंहितत्वमेवजीवस्यब्रह्म
नुगुणश्चायमेवार्थइत्याह ॥ यत्रेति ॥ सूत्रानुसारित्वाच्चायमेवार्थइति

गेर्भेदएवेतिभावेनमुक्तानांतारतम्यप्रतिपादकंवा
दिना ॥ नास्याब्रह्मवित्कुलेभवतीत्येतत्यस्य
मेति ॥ अत्रहेतुमाह ॥ यस्मादिति ॥ प्रायश
र्थः । सुराणांकुलेप्रायशोज्ञानिनएवभवंतीत्येतत्
। खं० ६ ॥ समापितभाष्योभगवानानंदतीर्थमुनिः
आनंदतीर्थभगवत्पादाचार्यविरचितस्याथर्व

मुद्रयित्वा प्रकाशितः शाकः १८२५ सन १९०३.